# श्री मूकांबिका स्तोत्रम्

मूलांभोरुह मध्यकोणविलसत् बन्धूक रागोज्ज्वलां
ज्वालाजाल जितेन्दुकान्तिलहरीं आनन्द संदायिनीम् ।
हेलालालित नीलकुंतलधरां नीलोत्पलाभां शुकां
कोल्लूराद्रि निवासिनीं भगवतीं ध्यायामि मूकांबिकाम् ॥ 1 ॥

बालादित्य निभाननां त्रिनयनां बालेंदुनाभूषितां
नीलाकार सुकेशिनीं सुललितां नित्यान्नदान प्रदाम् ।
शङ्खं चक्र गदा अभयं च दधतीं सारस्वतार्थ प्रदां
तां बालां त्रिपुरां शिवेन सहितां ध्यायामि मूकांबिकाम् ॥ 2 ॥

मध्यान्ह अर्क सहस्रकोटि सदृशां मायान्धकार स्थितां
मायाजाल विराजितां मदकरीं मारेण संसेविताम् ।
शूलं पाश कपाल पुस्तकधरां शुद्धार्थ विज्ञानदां
तां बालां त्रिपुरां शिवेन सहितां ध्यायामि मूकांबिकाम् ॥ 3 ॥

सन्ध्याराग समाननां त्रिनयनां सन्मानसैः पूजितां
चक्राक्षाभय कंबुशोभित करां प्रालंबवेणीयुताम् ।
ईषत्फुल्ल सुकेतकी वरदलैरभ्यर्चितां तां शिवां
तां बालां त्रिपुरां शिवेन सहितां ध्यायामि मूकांबिकाम् ॥ 4 ॥

चंद्रादित्यसमान कुण्डलधरां चंद्रार्क कोटिप्रभां
चंद्रार्काग्नि विलोचनां शशिमुखीं इंद्रादि संसेविताम् ।
भक्ताभीष्ट वरप्रदां त्रिनयनां चिंताकुल ध्वंसिनीं
मन्त्रारादि वने स्थितां मणिमयीं ध्यायामि मूकांबिकाम् ॥ 5 ॥

कल्याणीं कमलेक्षणां वरनिधिं वंदारु चिंतामणीं
कल्याणीं घनसंस्थितां घनकृपां मायां महावैष्णवीम् ।
कल्यां कंबुसुदर्शन अभयकरां शंभुप्रियां कामदां
कल्याणीं त्रिपुरां शिवेन सहितां ध्यायामि मूकांबिकाम् ॥ 6 ॥

कालांभोधर कुण्डलाञ्चित मुखां कर्पूर वीटीयुतां
कर्णालंबित हेमकुण्डलधरां माणिक्य काञ्चीधराम् ।
कैवल्यैक परायणां कलिमुखीं पद्मासनीं संस्थितां
तां बालां त्रिगुणां शिवेन सहितां ध्यायामि मूकांबिकाम् ॥ 7 ॥

नानाकाञ्चि विचित्रवस्त्र सहितां नानाविधैर्भूषितां
नानापुष्प सुगंधमाल्य सहितां नानाजना सेविताम् ।
नाना वेद पुराण शास्त्रविनुतां नानाकलिद्र प्रथां
नाना रूपधरां महेश महिशीं ध्यायामि मूकांबिकाम् ॥ 8 ॥

राका तारक नायकोज्वल मुखीं श्रीकाम काम्यप्रदां
शोकारण्य धनंजय प्रतिनिभां कोपाटवी चंद्रिकाम् ।
श्रीकांतादि सुरार्चितां स्त्रियमिमां लोकावली नाशिनीं
लोकानन्द करीं नमामि शिरसा ध्यायामि मूकांबिकाम् ॥ 9 ॥

कांची किंकिणी कंकणांचितकरां मन्जीर हारोज्वलां
चंचत् कांचन किरीट कटिदामाश्लेष भूषोज्वलाम् ।
किन्चित् कान्चन कन्चुके मणिमये पद्मासने संस्थिथां
पन्चाद्यंचित संचरीं भगवतीं ध्यायामि मूकांबिकाम् ॥ 10 ॥

सौवर्णांबुज मध्य कांचि नयनां सौदामिनी सन्निभां
शङ्खं चक्र वराभयानि दधदीं इन्दोः कलांबिभ्रतीम् ।
ग्रैवेयासक्त हार कुन्डलधरां आखण्डलादि स्तुतां
मायां विंध्य निवासिनीं भगवतीं ध्यायामि मूकांबिकाम् ॥ 11 ॥

श्रीमन्विभवेन सुरैर् मुनिगणैर् अप्सरोपास्य सेव्यां
मन्त्रारादि समस्त देववनितैः संशोभमानां शिवाम् ।
सौवर्णांबुज धारिणीं त्रिनयनां मोहादि कामेश्वरीं
मूकांबां सकलेश सिद्धिवरदां वन्दे परां देवताम् ॥ 12 ॥